# 22 ॥ तदानीमिदानीं च ॥

नासन्नो सत्तदानीं प्रतिसमयममुं वच्मि दूरे न वाचा
मार्विर्भूतप्रपञ्चं मनुजकुलमुदैत्कालमेतं ब्रवीमि ।
क्रव्यादै राक्षसैर्भेरसुरकरटिभिः क्रूरकृत्यैश्च पूर्वं
संक्रान्तारण्यकोंधे नैरवसितमभून्मध्य एतद् व्रजस्य ॥ १

घोरान्बुद्ध्या नियम्याशुनिशिततरया दैवयोगाच्च शश्वत् -
प्राबल्यं स्वं मनुष्यः कथमपि विदधे मेदिनीकृत्स्नभागे ।
उद्गच्छत्यस्य पश्चाद्वसनविषयिणी चिन्तना पूर्वतोऽत -
श्चित्रैः पाषाणखण्डै र्वपुरलमकरोदस्थिभिर्यैः कपालैः ॥ २

आप्रत्यूषप्रदोषं भ्रमणमुदरसंवर्धनार्थं च युद्धं
भ्रातृव्यैश्शास्त्रहस्तैस्सह सहवसनैर्विद्यते यस्य नान्तः ।
मध्ये नृत्यं च गानं घनरवसहितं योषितां मण्डलेऽस्य
स्त्रीणां पृष्ठेऽनुसारः प्रतिदिवसविधिर्योऽर्थकामप्रयुक्तः ॥ ३

आरण्यस्यास्यवाण्यां शिशुवचन इव प्रायशो गीतमेव
स्वादिष्ठाश्शब्दगुम्फा श्चकविसमुचिताः प्रास्रवंस्तत्प्रसंगे ।
आस्तामेतत्किमस्मिन्परभुवनपरा बुद्धिरासीच्च धर्मेः
सर्वं चासीत्परं तत्कृजिगृहपटवत् संस्क्रियाहीनमास ॥ ४

तन्नाट्यं तच्चगीतं समररसिकता सैव भक्तादिलब्ध्यै
तत्कापट्यं फलाप्त्यै नरपरिषदि संदृश्यतेऽद्याप्यनूनं ।
बीजावस्थां च धर्मो न किल परिजहौ सभ्यतादोष एषः
यावद्वृक्षस्स भूत्वा फलति न भुवने तावदस्या न कीर्तिः॥ ५

---

## 23 ॥ शिशुस्वर्गः ॥

चरित्वा संभ्रान्तः क्रमणकठिने पुस्तकवने
नरस्तत्त्वान्वेषी विशिथिलमना वै विरमति ।
वदामीत्याश्वेनं व्रज यदि सुखेप्सुः शिशुगणं
वियुक्तं दम्भाद्यैस्सरलगतिमानन्दजनकम् ॥ १

तदीयं संजल्पं मधुरमवधानेन शृणु रे
भवेच्छीघ्रं ते विस्मरणमखिलानां खलु रुजां
उदेत्येषां वाणी कथमथ च भावास्समुदिताः
कथं प्रज्ञा जाता विदितमिह कस्येदमधुना ॥ २

अहंता नोत्पन्ना न किल ममताया अपि जनिः
प्रकृष्टं चैतन्यं स्फुरति दृशि सर्वत्र च शिशोः ।
करोति क्रीडां यः शशिवृषभकाद्यैस्तणचयैर-
स्वयं सृष्ट्वा लोकान् व्यवहरति चात्रैव मुदितः ॥ ३

अवच्छेदः काले दिशि च न शिशोरस्ति विदुषो
विनान्नं भुङ्क्तेऽद्भिः पिबति च विना तृप्यति भृशं ।
ददात्यन्येभ्योऽसौ स्वपरगणनावर्जितविधं
यथेच्छं यानान् यः करचरणचेष्टैः प्रकुरुते ॥ ४

सृजन्तस्स्वर्वासं विमलवदनैर्नृत्तहसितैश्-
चरित्रैरव्याजै रमृतवचनैश्चापि शिशवः ।
विमुक्तान्कुर्वाणास्सविधपतितान् संसृतिशुचो
निर्लिपा भौमा ये सकलरमणीयाश्शुभमयाः ॥ ५

---

## 24 ॥ भूतक्रीडा ॥

चरित्रं लोकस्याखिलमिह सुसूक्ष्मं कलयतां
प्रकाशं भूतानां विहृतिरिति तूर्णं भवति तत् ।
यदिस्युर्लीलास्ताः प्रशमसहितास्साधु सकलं
परं त्वेषा रीतिः प्रसरति न सर्वत्र सततम् ॥ १

असाम्राज्येऽस्माकं भरतवसुधाकोशभवने
समृद्धे सस्याद्यै रहह महती भीरुपनता ।
जना हृष्टाः पुष्टा झटिति निरयेद्राङ्ङ्घ्रिपतिताः
धरित्रीकम्पोत्थं हृदयदलनं शोकचरितम् ॥ २

नरा गावो वृक्षाः परिमुषितजीवा अयुतशः
क्षणान्नीता नद्यः पुलिनमयतां चित्रसलिलाः ।
निधानं वारीणां परिणतमगाधं गिरिकुलं
विपर्यासेना भूद्गिरिकुलमगाधं जलगृहम् ॥ ३

अहो क्रीडा भूमेः! कुतुकचलिता प्राप्य विकृतिं
तनुं स्वीयां नूत्नामकुरुत! नरस्यातिमहतः ।
वितन्वानायासान् सपदिवितथान्दीर्घघटितान्
विजानात्येषा किं स्वकृतविषमस्याद्य गुरुताम् ॥ ४

प्रकृष्टा कृष्ट्य भू र्नयनसमरक्षां गतवती
प्रदात्री सस्यानां निजजनगणेभ्योऽमिततया ।
इदनीं पूर्णाद्भि र्निरुपमबुभुक्षा क्षितितले
प्रमृष्टाः पन्थानोऽशननिनयनं व्योम्नि घटते ॥ ५

विना गेहं वासः कतिकति जना दिक्षु पतिताः
शिशूनां संख्यां को निगदितुमये पारयति नः ।
मृतानां तोये भूविवरवनपाल्योश्च गणश –
स्तिरोभूता सद्यस्सुचिरविरचिता संपदधुना ॥ ६

नरस्याल्पत्वं चावगमयितुमेनं नमयितुं
नितान्तं प्रोद्दृप्तं प्रकृतिरुपदेष्ट्री प्रचलिता ।
अघौघानां नृणां परिणतिरियं दैवविहिता
वदन्त्येवं लोके विपदमधिकृत्यापि विबुधाः ॥ ७

इदं क्रूरं नूनं नर इह यथावच्चरति यत्
स पीडामुत्पन्नामसकृदवनौ भूजलमुखैः ।
दृढं सोढ्वोत्साही पुनरपि नवीकारकृतधी
र्विशिष्टां वृद्धिं द्रागविरचयति तद्विस्मयपदम् ॥ ८

---

## 25 ॥ भूभारः ॥

प्रभुं लक्ष्मीकान्तं कलशजलधौ कल्मषहरे
शयानं नागेशे निखिलजगतीरक्षणगुरुं ।
भराक्रान्ता शश्वत् सजलनयना भूमिवनिता
ययाचे देवाग्र्य स्सहनगुणमयी भारहरणम् ॥ १

फलं घोरं युद्धं कुरुयदुमुखानां भटवरा
असंख्येयास्तूर्णं रणभुवि निकृत्ता निर्दयतया ।
शिशूनामाधिक्यं कथमिह भवेद् दुर्वहभरो
जनन्याश्चित्रं तद्वधमपि कथं सा वरयते ॥ २

गरिम्णा कुर्वन्तस्सततमसुखं भूरि गिरयो
महद्भिर्व्याकीर्णा गहनवनपाल्यश्च तरुभिः ।
गजाद्यानां यूथा गुरुतरमृगाणां सुबहवः
कथं मात्रा भारा न परिगणितास्ते ऽम्बुनिधयः ॥ ३

उपेक्ष्यस्संख्यायामतिलघुरसौ केन विधिना
नरो भारो भूम्या यदधिकविवृद्धिश्च गणिता ।
अयं वै हेतुस्स्याद्विभुरिह नरस्सृष्टिषु यतो
गुणाश्चेषाश्चास्य प्रचुरमवधानं हि भजते ॥ ४

हृदो वृत्तिर्यावद्विलसति सती तावदगुरु
र्नरो, ऽमुं लोभादि स्स्पृशति यदि संयाति गरिमा ।
मनो दुष्टं भूयो गुरुतरमपीहास्ति हि गिरे
रिदं भूयिष्ठं चेदभिलषति भूमिः क्षयमहो ॥ ५

कियन्तं कालं सा भरमसहमाना ध्रुवदना
सुतानामन्योन्यं समरहननं काङ्क्षतु मुहुः ।
सुसत्त्वं सेवन्तां लघुतरमिमे तृप्तिघटितं
भुवो भारो न स्यात् सकलसुतवर्गस्सुखमियात् ॥ ६

---

# ॥ उत्तर भागः – कथानकानि ॥

## 1. ॥ गोदिवा ॥

कवेन्त्रिपुर्यां किल दुर्विनीतो राजानकः क्रौर्यरतिर्बभूव ।
राज्ञी सती तस्य च गोदिवाख्या गृहीतरूपा भुवि शान्तिरेव ॥ १

करं कदाचित् स जनैरसाध्यं नियुक्तवान्निष्करुणं नियन्ता ।
निशम्य चैतं परुषं निदेशं मम्लुः प्रजा द्राग्भृशशोकतप्ताः ॥ २

अहो महद्दैशसमागतं नः कुर्मो वयं किन्नु विपन्निवृत्त्यै ।
इत्थं मिथस्ताः कथयांबभूवु रुपांशु रथ्यास्वतिमात्रभीताः ॥ ३

अनन्तरं पौरजनाश्च किंचिदाहृत्य धैर्यं सहजं विपत्तौ ।
द्रष्टुं स्वकर्मण्युपतस्थिरे तं भूपं युवत्यस्स्थविराश्चबालाः ॥ ४

त्रायस्व नः क्षिप्रतरं नरेन्द्र करेण तीक्ष्णेन नितान्तदूनान् ।
कृतेऽशुभेऽन्यैरसि रक्षिता त्वं त्वय्येव रुष्टे शरणं कुतो नः ॥ ५

श्रुत्वेति तेषामतिपेशलानि वचांसि भूपो रुदितान्वितानि ।
रोषेण तान्भर्त्सयतिस्म दीनान् जनोहिताद्दक्कुरुतेकिमन्यत् ॥ ६

तपस्विनस्ते परिभग्नचित्ताः क्षणात्सकाशान्निरगुश्च तस्य ।
सहस्थिता तन्निखिलं निरीक्ष्य देवी निकामं दयमानचेताः ॥ ७

पितासि लोकस्य हि रक्षकत्वा द्युक्तं प्रजानामवधीरणं किम् ।
दूयेभृशं वीक्ष्य दशां तदीयां निवारणंब्रूहि कथं प्रसिध्येत् ॥ ८

आज्ञप्यतां नाथ भवामि सज्जा कर्तुं प्रजार्थं यदपीह कर्म ।
इत्युक्तवत्यां पतिदेवताया मुवाच दुष्टस्मितदूषितास्यः ॥ ९

एषा मनीषा यदि वाजिरूढा वीथीविहारं कुरु वीतवामा ।
तथेति वाचं नृपधर्मपत्नी कृतस्मितावोचदपांसुला सा ॥ १०

त्यागे रतानां भयदायकं किं किं दुष्करं भावि जगत्यमुष्मिन् ।
द्रागेव वार्ता नगरीं प्रविष्टा देवी प्रतिज्ञातरणोद्यतेति ॥ ११

वीथ्यश्च सद्यो विजना बभूवु र्गतो गृहान्तस्सकलोऽपिलोकः ।
आरुह्य वाहं वसनानिहित्वा चारित्रवासा महिषी महार्घा ॥ १२

प्रचक्रमे मन्दतरं मुदासौ वीथीश्चतस्रो जनताशुभार्थम् ।
प्रासादमासाद्य ततः क्रमेण पत्युस्सकाशं च यशस्विनीसा ॥ १३

तूष्णीं स्थिता सांजलिबन्धहस्ता सती पुरस्तस्य विधूतदर्पा ।
शीलोन्नतायाः पुरतो महिष्या बुद्ध्वा नृपस्स्वं लघिमानमेव॥ १४

लज्जाहतो गद्गदया स्म वाण्या देविक्षमस्वेति कथंचिदाह ।
आज्ञापयामास स सद्य एव निराकृतिं पीडयतः करस्य ॥ १५

प्रजाः प्रमोदं परमं प्रपन्ना निर्व्याजवात्सल्यगुणाभिरामाम् ।
रामां शशंसुर्नृपतिं च भूयो जायाप्रभावोदितसाधुभावम् ॥ १६

आख्यानमेतन्न समाप्तिमेति प्रजाप्रवादो यदि नायमुक्तः ।
छिद्रे कवाटस्य कुबुद्धिरेको वीथीगतां दिग्वसनां दिदृक्षुः ॥ १७

विक्षिप्तदृष्टिर्हृतनेत्र आसीत् क्रियानुरूपं फलमाप्यते हि ।
साध्वीकथां पुण्यकरीं पुराणीं पठन्तु सर्वे महते शिवाय ॥ १८

---

## 2 ॥ प्रावरणभाषितम् ॥

पुरी प्रशस्ता विपुला जपाने देशेऽस्ति काचिन्निखिलैर्निषेव्या ।
शाला बभासे महतीहयस्यां विक्रीतमन्नं वसितेन[1] सार्धम् ॥ १

तामागतः कश्चनसार्थवाहो वासाभिकांक्षी व्ययदो[2] दिनान्ते ।
अगारमेकं प्रदिदेश तस्मै शालाधिपस्सर्वसुखैरुपेतम् ॥ २

शय्यागते प्रावरणावृते[3]ऽस्मिन् प्राप्ते निशीथेऽस्तमिते प्रदीपे ।
किं शैत्यपीडा तव ते किमस्तीत्याकारकैर्वर्णचयैर्निबद्धः ॥ ३

संवादरूपश्च[4] विराव[5] एकस्समुत्थितो जागरयन्मुहुस्तम् ।
भीतस्स शय्यां विजहौ प्रधावन्नुवाच शालेशमुदन्तमेनम् ॥ ४

स सत्वरं तेन विवेशगेहं निदानमेवास्य विचेतुकामः ।
श्रुतं न किञ्चिन्न च दृष्टमस्मिन् शालाधिनाथस्त्वमगारमारात् ॥ ५

---

1 Lodging 2 Charges 3 Quilt 4 Conversation 5 Voice.

तूष्णीं निवृत्तो वणिजश्च गेहमन्यत्प्रदिष्टं वसनाय[6] रात्र्याम् ।
आगन्तुकोऽन्यो[7] दिवसेऽपरस्मिन्नवाप पूर्वोषितमेव वासम् ॥ ६

श्रुत्वार्धरात्रे स तमेव शब्दं निनाय रात्रेरपरत्र शेषम् ।
अनन्तरं स स्वयमेव रात्रौ संप्राप्य शालेश इदं त्वगारम् ॥ ७

सुखं प्रसुष्वाप परीतगात्रस्तत्रस्थितप्रावरणेन गाढम् ।
मध्येनिशं तत्र यथावदेव शब्दश्च जातस्स च बोधमायात् ॥ ८

त्रस्तः पुरस्तादथ धृष्टचित्तो विचिन्त्य हेतून्सकलान्स धीमान् ।
अवेद्द्रुतं प्रावरणं निदानं[8] नाभूद्रवस्तस्य यतो निरासे ॥ ९

स तत् पुनः क्षेप्तुमना उवाह द्वितीयहस्तापणिकस्य[9] हस्ते ।
तद्यत्सकाशादयमात्तवान्पुरा बभाण चित्रं च तदीयवृत्तम् ॥ १०

गृह्णन्वणिक् प्रावरणं स तूर्णं क्रीतं तु यस्मात्पुरुषात्पुरेदम् ।
अन्विष्य तं श्रावयतिस्म सर्वं प्रत्यर्पयामास च तज्जवेन ॥ ११

इयाय तं प्रावरणं किलेत्थं गृहे तदीयेऽवसतां कुमारौ ।
पिता च माता च मृतौ तुयाल्ये भ्रात्रोर्ययोर्वित्तमपीह नासीत् ॥ १२

अल्पे वयस्येव शरीरयात्रा प्रचालिता देहपरिश्रमेण ।
लब्धं न पर्याप्तमभूद्धनं तत् क्रमेण वस्तूनि गृहस्थितानि ॥ १३

6 Lodging 7 Traveller 8 Cause 9 Second-hand dealer.

एकैकशो विक्रयमागतानि पित्रा विसृष्टान्यधनेन कानिचित्।
रिक्थेषु पित्र्येष्ववशिष्टमेकं निवारकं प्रावरणं हिमस्य॥ १४

अन्योन्यमाश्लिष्टतनू निशाया माच्छाद्य तौ तेन हिमे प्रसुप्तौ।
किं शैत्यपीडा तव ते किमस्ती त्यापृष्टवन्तावसकृन्मिथश्च॥ १५

अन्येद्युरागाद्गृहवेतनाय स्वामी निवासस्य कृपाविहीनः।
तौ वेपिनावश्रुमुखौ प्रवक्तुमशक्नुवन्तौ च जडाव भूताम्॥ १६

निर्लज्जमेवावरणं तदीयं जहार वेगा द्रुदतोस्तयोस्सः।
बभूव यस्मिंस्थिरतामुपेतं किंशैत्यपीडादिवचोऽतिभीमम्॥ १७

निष्कासयामास गृहाच्चतस्मा त्त्यक्तावनाथाववनीतले तौ।
किं नास्ति धर्मो किमुवा दयावान्बभूव चेत्तद्व्यसने कृतं किम्।
प्रायो नरस्स्वार्थपरोऽस्ति लोके दयाच धर्मश्च बहोः पताका॥ १८

अहर्गतं दुर्गतयोः कथंचिद्रथ्यातले क्षुत्कृशयोर्नितान्तम्।
रात्र्यागता घोरतरा हिमेन भ्रात्रोस्तु चण्डेन परं गता न॥ १९

अनावृतौ स्थण्डिलशायिनौ तौ श्रान्तौ प्रसुप्तौ न च विप्रबुद्धौ।
प्रात र्जनास्तौ निलयं प्रणिन्युर्हस्तै स्सहस्रेण विशोभितायाः॥२०

आख्या च यस्या भुवने दयेति तद्देवतायाः परमं प्रशान्तम्।
देव्या दयाया न करास्सहस्रं पर्याप्तिमेतुं प्रभवन्ति लोके।
कोटिश्चतेषामधिका न भायान्नरस्य दुःखे ह्यनुचिन्त्यमाने॥ २१

---

# 3. ॥ कनकपट्टिका ॥

वाराणसीपुण्यपुरे कदाचिद्देवालये विश्वपतेः पवित्रे ।
मूर्तेः पुरः कोऽपि पपात पट्टो[1] मध्येदिनं हेममयः प्रदीप्तः ॥ १

ससम्भ्रमं जग्मुरथार्चकास्तं लेखं[2] विचित्रं ददृशुश्च तस्मिन् ।
भक्तो भुवीशस्य य उत्तमस्स्यात्तस्य ध्रुवं हाटकपट्टिकेति ॥ २

ततोऽधिकारे पुरुषा नियुक्ता निकेतने विस्मयमानचित्ताः ।
आघोषयामासुरनुक्षणं तां ग्रामे च दूते नगरे च वार्ताम् ॥ ३

आत्मानमेवाभिमतं पुरारेः कर्तुं व्यवस्यन्ति सम स्म तत्र ।
ग्रहीतुमेनं भगवत्प्रसादं जनास्समस्ता भृशमीषुरेव ॥ ४

यज्ञे रता ये निरवर्तयंस्ते क्रतून् विचित्रान् बहुदक्षिणाकान् ।
वाप्यश्च कूपाश्च तडाकवर्या निर्मापिता भूरिश आढ्यलोकैः ॥ ५

संकीर्तने भागवतप्रकाण्डा नाम्नां प्रवृत्ताः परमेश्वरस्य ।
विचेरुरुर्वीं गणनामतीता भक्तिं स्वकीयां प्रकटां विधातुम् ॥ ६

असाधयन् ज्ञानपथे निषक्ता जवेन चत्वार्यपि साधनानि ।
प्राप्तुं परेशस्य परं प्रदानं प्राणान्निरयेमुर्हठयोगवीराः ॥ ७

तपस्विनश्चेरुरुदग्रवेगात्तपो महल्लब्धुमथेशदामं ।
इत्थं च धर्मस्य जजृम्भिरे द्राक् स्कन्धास्समग्रा नवया विभूत्या ॥ ८

1 Plate 2 Inscription.

अथ प्रक्लृप्ते दिवसे प्रदातुं क्षेत्रे महेशस्य शुभप्रसादं ।
दिग्भ्यस्समाभ्यः प्रययुः पुरीं तामपेक्षकाः प्रत्ययपूर्णचित्ताः ॥ ९

महोत्सवं तं तु निरीक्षितुं ये तत्रागता जानपदाश्च पौराः ।
मार्गोपमार्गा निबिडा बभूवु स्तैराशु काशी विललास नूत्ना ॥ १०

रुग्णाः क्षुधार्ताः पथि दुःखभाजो येऽवस्थिताः पङ्क्तिषु मन्दिरस्य ।
करेषु तेषां कनकं ववर्षु र्न वित्तमत्ता ददृशु र्मुखानि ॥ ११

तत्रान्तरे निश्चयमेव चक्रु र्विपश्चितोऽसाविति पट्टिकार्हः ।
धनं यदीयं निखिलं वितीर्णं वर्षे गते कर्मसु पुण्यवत्सु ॥ १२

ततस्स धन्यो भुवनेशमूर्ते र्नीतः पुरस्तान्महतादरेण ।
यत्राचकाद्द्भुतहेमपट्टो दिनस्य मध्ये द्विगुणं ज्वलन्सः ॥ १३

स्पृष्टस्स तेन स्वकरेण यावद्बभूव तावच्छिव सीसरूपः ।
भीतस्य हस्तात्पतितस्स भूयो भूतश्च हैमो जनविस्मयाय ॥ १४

अर्हत्तमानां वरणं यथावत्पुनर्भविष्यत्यथ भाविवर्षे ।
आघोषणापीत्थमकारि सद्यः प्रवर्धयन्ती कुतुकं जनानाम् ॥ १५

आश्चर्यमेवप्रवदन्त एतत सर्वेऽपि गेहं प्रति निर्ययुस्ते ।
शम्भुप्रसादाहरणाभिलाषा दम्भेरिता धर्मपथे च वृत्ताः ।
पस्पर्धिरे स्वीयमुदारभावं कर्तुं प्रकाशं भुवि मूढचित्ताः ॥ १६

वर्ष श्च यातो दिवसस्समागत प्रस्पर्धिनस्संमिलितास्सभायां ।
चिराद्वृतः कश्चन मासषट्के दाने यदीया व्ययिता महार्द्धिः ॥ १७

असावगादग्रत आदिमूर्तेर्जग्राह पट्टं च कुतूहलेन ।
हा हन्त सीसं समभूत्स सद्य स्समेबभूवु र्भयविह्वलांगाः ॥ १८

अहो विचित्रा गतिरीश्वरस्य नरस्य दर्पश्शतधाविभग्नः ।
कालेव्यतीते पुनरेव मान्यैर्निर्धारितो धर्मवरेण्य एकः ॥ १९

स्पर्शंगतं तस्य करस्य कष्टं जांबूनदं सीसमिदं प्रजातं ।
भूमिं गता दैविकपट्टिका सा बभूव हैमी प्रथमं यथा द्विः ॥ २०

सामाजिकानां हृदयस्थितिं कां ब्रूमो वयं विस्मयभीतिमिश्रां ।
संप्रेरितोऽतः प्रभुणेव सद्यो देवार्चकेष्वेकतमः पुरस्थम ॥ २१

ग्रामीणमेकं जनमध्यदृष्टं ग्रहीतुमाज्ञापयतिस्म पट्टं ।
तपस्व्यसौ निर्वृतिपूर्णचेताः पस्पर्श भक्त्या तमकैतवज्ञः ॥ २२

अहो महो द्राक्प्रससार तस्मात्स्फूर्तिं भजद्दृग्गिहरं च भूयः ।
हर्षश्च शोको भयविस्मयौ च प्रापुः प्रवेशं हृदये जनानाम् ॥ २३

को वायमीशेन वृतस्स्वयं किं कर्माकरोदुत्तममेष धन्यः ।
असौ किल ग्रामिक एव कश्चित्साधुः कुटुम्बी चरितस्वधर्मः ॥ २४

आगात्तदा पूरयितुं प्रतिज्ञां वाराणसीमात्मकृतां कदाचित् ।
गच्छन्गृहं विश्वपतेस्तदर्थं ददर्श दीनान्गणशस्स मार्गे ॥ २५

धनं यथाशक्ति विसारितेषु निधाय पाणिष्वनुतापपूर्वम्।
कुष्ठेन घोरेण निपीडिताङ्गं कंचित्प्रपेदे कृतहारवं क्रमात्॥ २६

दूरीकृतं यन्निकटं मनुष्यैः शोच्यां स्थितिं तस्य निरीक्ष्य तूर्णं।
अङ्गानि सर्वाण्यभिमृश्य पूर्वं पाणी गृहीत्वा विकलौ निजाभ्याम्॥ २७

ईशो महान्कष्टमिदं सहस्वे त्याख्याय तं नेत्रजलैरसिक्त।
इत्थं चिरं भद्रवचांसि भूयो निगद्य मन्दं विजहौ रुदंस्तम्॥ २८

ययौ ततो मन्दिरमात्मयोने र्लेभे च चामीकरपट्टिकां स।
देवस्य भक्तः परमस्सलोके भक्तिर्निजा यस्य नरे विशाला॥ २९

---

# 4. ॥ उपहारः ॥

नृपः प्रयातो मृगयार्थमेकदा
मासेषु यातेष्वपि नागमत्पुनः ।
अत्रान्तरे दुस्सहखेदनिष्ठुरं
दुर्भिक्षमेकं प्रविवेश मेदिनीम् ॥ १

ववाम वह्निं तपनस्सुदारुणं
जलाशयाश्शुष्कतरा श्च चक्रिरे ।
सस्यानि दग्धानि बभूवुरञ्जसा
प्रजा नितान्तं कबलीकृताः क्षुधा ॥ २

शेकुर्नियुक्ता भुवि राज्यधारणे
नाज्ञाप्रयोगै रवितुं क्षणं जनान् ।
आढ्यास्तथा संचितधान्यराशयो
नापारयन्दातुमतो निवारणम् ॥ ३

कार्तान्तिकाः पौरवराः पुरोहिताः –
दुर्भिक्षहेतुं भृशखिन्नकमानसाः ।
पप्रच्छुरेतस्य च शान्तिफक्किकां
" भूयां श्च मन्युः फलितोऽत्र दैविकः ॥ ४

प्रेयस्तमं यज्जगतीह गण्यते
 नृपेण दातव्यमिदं प्रशान्तये "।
प्रत्यूचुरित्थं हृदयस्य दारकं
 वचोऽप्रियं पथ्यमहो पुरोधसः ॥ ५

बल्यर्थमेनेऽथ ययाचिरे प्रियं
 राज्ञीं कुमारं क्षितिपाललालितं।
क्षेम जगत्याः परिगण्य सोत्तमं
 भृशार्दितापि प्रददौ स्तनंधयम् ॥ ६

इष्टाश्च देवा स्समयस्समागतो
 बलिप्रदानाय शिशुस्समाहृत ।
तावन्निवृत्तो मृगयागतो नृपः
 क्षणान्न्यरौत्सीदुपहारसंभ्रमम् ॥ ७

उवाच चव "निरणायि साधु नो
 पुरोहितैः किन्नु सुतः प्रियोऽथवा।
भार्या प्रिये" तन्महिषी निशम्य सा
 चकार देहं द्रुतमेव देवसात् ॥ ८

# 5. ॥ माणिक्यहारः ॥

वृद्धः पिता तस्य तनूजवर्या स्त्रयोबभूवु पितृभक्तिमन्तः ।
माणिक्यहारः कमनीयकान्ति वृद्धस्य पार्श्वे सततं चकास ॥ १

अथैकदा तान्जनकोनिमन्त्र्य प्रोवाच "पुत्राः शृणुतादरेण ।
श्रेयस्करं हारमिमं मदियं करोति यः कर्म भृशप्रकृष्टम् ॥ २

युष्मासु तस्मै प्रददामि नूनं प्रयत्यतां भूरिपरिश्रमेण" ।
इत्युक्तवन्तं पितरं प्रणम्य ते निर्ययुस्साधयितुं सुकर्म ॥ ३

क्रान्तेऽथ वर्षे पुनरराययुस्ते निर्वर्त्य कामं महनीयकार्यं ।
आचख्युरात्मीय मुदन्तमेकै कशश्च पुत्रा जनकं प्रहृष्टाः ॥ ४

अन्विष्य लोकोत्तरकर्म भूमिं प्राप्ता मया पर्यटता विशाला ।
ऋद्धस्य कस्यापि वणिक्सुतस्यो दपादि मैत्री मम चात्र पुर्याम् ॥ ५

समर्प्य सर्वं मयि सार्थवाहः कार्यस्यहेतो र्निरगाद्धनं स्वं ।
काले गते दीर्घतरे स आगात प्रत्यर्पयं न्यासमखण्डमेव ॥ ६

किं मन्यसे तात न कर्म साधु प्रसादमर्हामि तवाद्य येन ।
उक्त्वेति वाचं विरराम सूनु ज्येष्ठः पिता प्रत्यवदत्तदानीम् ॥ ७

त्वं पापभीरुः कृतवान्यदेतत कर्तव्यमेवात्र विशिष्यते किं ।
अथ प्रवक्तुं चरितं स्वकीयं प्रचक्रमे मध्यमपुत्र आशु ॥ ८

नौकाधिरूढः पतितोऽप्सु बालः प्राणांस्तृणीकृत्य मया ररक्षे।
घोरे प्रवाहे किमु तात कृत्यं न गण्यते त्वन्मणिहार हारि ॥ ९

पिताब्रवीत्पुत्र विचेष्टितं ते नूनं महत्किन्त्वधिकं वृणेऽहं ।
क्षिप्रं कनिष्ठस्स्वकथामभाणीत् कदाचिदेकत्र गिरिप्रदेशे ॥ १०

नयन्नजान्वीक्षितवानरिं मे प्रान्ते प्रसुप्तं शिखरस्य भीमे ।
आसन्नमृत्युं सहसाभिधाव्य प्रबोध्य गूर्णन्मरणादरक्षम् ॥ ११

सद्यः पितोवाच तवैव हारो यदाचरो विस्मृत पूर्ववैरः ॥ १२

---

## 6. ॥ राजा कन्यूतः ॥

कन्यूतभूपो न्यवसच्छलथात्मा कृत्वाधिराज्यं समयं महान्तं ।
रुरोध शश्राम जघान भूयो जहार चाजौ ययुधे मुमोष ॥ १

चित्ते चकाराब्धितटे चरन्स स्वीयानि कर्माणि जगाद चोच्चैः ।
मरुत्सु चण्डेषु पयोधिमार्गे नयन् भटान् भीमतरान् रणेषु ॥ २

युद्ध्वाप्रवं भो विजयं बृहन्तं महीतले कस्य यशोऽस्मदीयम् ।
आस्थानलोकस्सहसान्ववोच युष्मद्यशः कस्य महीतलेस्मिन् ॥ ३

राज्येन किं मे गलितं वयश्च श्रान्तोऽस्म्यहं पुत्रवरा अमी मे।
कांक्षन्ति मृत्युं मम संप्रयाण कालस्समायात इतीव वेद्मि॥ ४

मैवं महाराज भण प्रसीदे त्याचुक्रुशुस्साश्रुमुखा जनास्ते।
वर्षाणि पञ्चाशदसंशयं त्वं जीवेर्मनस्वी बलवान्यत श्च॥ ५

जगर्ज धर्माधिगुरुस्सचेष्टः "कन्यूत भूपं प्रति मन्त्रिवर्य।
[1]
वर्षाणि पञ्चाशदिति प्रवक्तुं किं त्वं प्रमत्तः शरदः सहस्रम्॥ ६

नराजिजीवु, गिरिशृङ्ग उच्चे किं नैकदा स्तम्भयति स्म सूर्यं।
यूदाधिपो यावदरीं श्चहन्ति निशाकरं छादयति स्म तावत्॥ ७
[2]
कन्यूतदेवस्य मनो यदिस्या च्छक्यं किलेदं निखिलं तदैव"।
"किं शक्नुयामुत्तम धर्मरक्षि न्नूर्ध्वे स्थिरं कर्तुममुं पतङ्गम्॥ ८

किं चाररोधे प्रभवेयमर्हं स्तारापतेः खे रजतात्मनोऽहं।
मच्छासने तिष्ठति चन्द्रमाश्चेत् स्रोतांसि शास्यामहमस्य वार्धेः॥ ९

अमी नरङ्गा अपि कुर्युराज्ञा माक्रामका ये मम संज्ञयाऽद्य"।
व्यजिज्ञपद्धर्मगुरुः प्रणम्य "प्रभोत्वदीया पृथिवी जलं च"॥ १०

आज्ञापयामास नृपस्तदानी मम्भोधिमामन्त्र्य "विसर्पसर्प"।
परात्पवित्रादपसर्प रे त्वं तिष्ठाम्यहं फेनिल यत्र तस्मात्॥ ११

---

1. Priest 2. the Jewish chief

उद्वृत्त वाताहत मासनं गा भर्तुस्तव त्वं भव निश्चलो द्राक् ।
पादौ स्पृशाशा मम मा समुद्रे "त्यस्मै ददावम्बुधिरुत्तरं किम् ॥ १२

उच्चैस्तरं केवलमुज्जुघोष कल्लोलमाला महता जवेन ।
तीरेऽभिपेतुः पृथुनादवत्यः पश्चात्प्रसेरु र्नृपति र्नरा श्च ॥ १३

धर्माधिकारी च मृषाप्रशंसी, राजादिदेशाथ कठोरवाचा ।
" कदापि वस्सन्तु नमांसि मैवं नृरूपिणे नश्वरमृच्चयाय ॥ १४

वशे समुद्रा श्च भवन्ति भूमि र्यत्तेजसस्तन्नमत स्तुवीत" ।
ततः परस्तान्न कदापि भूपो दधार सौवर्णकीरीटमेषः ॥ १५

---

## 7 ॥ भर्तृविश्वासः ॥

शृणोति गोपः श्वशृगालयोस्समं
त्रिरावमेकं भयणात्मकं, स्थितः ।
शिलासु कीर्णासु दिशात्यसौ दशा -
ववेक्षतेऽनन्तिकगुल्म इङ्गनम् ॥ १

चक्षुः क्षिपन्वै हरिषण्डमध्यतो
श्वा दृश्यते कश्चि, दसौ न पार्वतः ।
चेष्टा अशान्ता श्च भवन्ति ह्रीयुता
गोपा यथा पश्यति, भिद्यते रुतम् ॥ २

न तत्र कश्चित्परितोऽक्षिगोचरो
निम्ने प्रदेशे जन उन्नतेऽथवा।
शब्दो न सीत्काररवो निशम्यते,
करोति जन्तुस्त्वयमत्र किं स्थले ॥ ३

संछन्नकोणः पृथुविश्रमालयो[1]
यावन्निदाघं परिहीयते स्थिरः।
नीहारराशिर्विपुलो न हैमनः,
पुरो भृगुस्तुङ्गतरोऽभिवर्धते ॥ ४
[2]

स्वपित्यधः कश्चन निस्स्वनो ह्रदः,
स्थलं सुदूरं हृदये नगस्य तत्।
दूरे च मार्गस्य तथैव वेश्मनो
दूरात्तथा मानुषपाणिपादतः ॥ ५

कदाचिदत्रोत्प्लवते सरस्तिरो[3]
मीनः प्रहिण्वन्निजशब्दमेककः।
काकस्य रावः परुषैः प्रतिस्वनै-
स्तुङ्गैः प्रकामं शिखरैरनूद्यते ॥ ६

1 Place of rest 2 Steep rock 3 across.

आयाति तत्रेन्द्रधनुश्च नीरद-
स्तुषारसंघा[4] पिहितांबरा भृशं।
सूर्यांशवश्चापि परं तु मारुत-
शक्तो न गन्तुं विहतः शिलालिभिः॥ ७

गोपः क्षणं तिष्ठति पापशङ्कया
पाषाणखण्डेषु शिलासु याति च।
श्वानैकदृष्टिस्त्वरयातितीव्रया
यावन्न दूरं गतवान् स तावता॥ ८

निरीक्षते मानुषमस्थिपञ्जरं,
भीतोऽतिमात्रं, परितो विनिश्वसन्।
ज्ञातुं चरित्रं च स संप्रपश्यति,
शिलोच्चयादुच्चतरात् सुसङ्कटात्[5]॥ ९

भयस्य भूमेः[6] पतितस्स मानवः,
स्फुटत्यथान्ते विशदं समं तदा।
ससार[7] तन्नाम, सकः, कुतः कदा
ऽऽगत श्च पन्थानममुं, कदा गतः॥ १०

---

4 mist 5 dreadful 6 birth place 7 bursts out

इत्यादिकं, किन्त्वतिशोकनिर्भरा
निगद्यते यस्य कृते कथा मया।
शृण्वन्द्भुतं तद्भृशशाश्वतं यश -
श्चिह्नं च यच्छब्दमयं समर्हति॥ ११

श्वानः श्वसन्दीनतरं रुदन्नयं
पुनः पुनस्तन्निकटे तथैव च।
मासत्रयं तद्विजने स्थलेऽ वस -
न्निदर्शनं स्पष्टम भूद्यथा दिने॥ १२

यस्मिन्स पान्थो म्रियते स्म दुर्भग -
स्ततोऽनु तस्मिन्पद एव वाऽथवा।
भर्तुस्समीपे स्थितवान् स रक्षकस्,
तं दीर्घकालं कथमेष जीवितः?॥ १३

जानात्यसौ यः प्रददौ समुन्नतां
भक्तिं च विश्वासममुं प्रमातिगम्॥ १४

---

8 monument 9 proof.

# 8. ॥ प्रश्नस्य पक्षद्वयम् ॥

अश्वाधिरूढः शितकुन्तपाणि रापादमस्तं कवचावृत श्च ।
कश्चिद्भटो राजपथे कदाचि द्वेगाद्ययौ वीक्षितनैकयुद्धः ॥ १

तदाऽपरस्तत्सदृशः प्रतीपाद्देशाद्भयी कुन्तकरश्च मार्गे ।
1
आगा, दुभौ तस्थतुराभिमुख्ये यत्रालसत्स्तम्भगतश्च खेट ॥ २
2

वर्णाविचित्रा पठिता उभाभ्यां तद्दृश्यमाना कुतुकान्विताभ्यां ।
3
अहो प्रभा स्वर्णमयस्य कीदृक खेटस्य वीरोऽवददेक उच्चैः ॥ ३

तदैव योधोऽपर उज्जुघोष भ्राजोऽद्भुतं राजतखेटजन्म ।
सद्यस्तयोगाविरभद्विवाद किं राजतं वा किमु हैममेतत् ॥ ४

अन्धोऽस्म्यहं किं किमुवाहमन्धः परस्परं वाद इति प्रवृद्ध ।
क्रमेण वाग्भ्यः प्रहरान्गतौ तौ कुन्ताहतौ पेततु रश्वपृष्ठात् ॥ ५
4 5

तौ मूर्च्छितौ मार्गचरो दयार्द्रस सिक्त्वाम्भसाऽसृग्लिवहेशयानौ ।
अलम्भयच्छीघ्रमसून्वोचत किमर्थमेवं च कृतं युवाभ्याम् ॥ ६

उभावपि प्रोचतुरात्मपक्षं स्वरेण दीनेन भृशात्तसारौ ।
एको ऽवदद्धाटकखेटमेतद् ब्रवीत्ययं राजतमित्यजस्रं ॥ ७

---

2 opposite 2 face to face 3 letters 4 words 5 blows.

अन्योऽभणद्राजतखेटमेत च्छपत्यसौ[6] हाटकमित्यशान्तं[7] ।
एवं तयो: प्रब्रुवतोस्तु पान्थो निरीक्ष्य सम्यक्परितश्च खेटम् ॥ ८

ऊचे किलेत्थं सुहृदौ युवां द्वौ यथा यथावद्गृहिणौ तथैव ।
गृहीतवन्तौ पुनरन्यथापि पार्श्वे च खेट: कनकात्मकोऽयं ॥
पार्श्वे च चित्रो रजतात्मकोऽसौ पक्षद्वयावेक्षणमेव साधु ॥ ९

---

## 9. ॥ धर्माचार्य हात्तः ॥

शुशुभे किल हात्तनामको जपमालाभरणो बृहद्वपु: ।
गुरुराड् जनधर्मपालक स्सुखितो जेर्मनिदेश एकदा ॥ १

प्रसतोऽनशनाद्विमोचनं[1] जनतावैक्षत नो मनागपि ।
गुरुमूचुर थैत्य ते द्रुतं "सुतरां वृष्टिविलोपकर्शिता: ॥ २

भगवन्नधुना प्रसीद भोस्सहनं दुष्करमेव न: प्रभो ।
करुणाशबलं तवेक्षणं पततादेषु जनेष्वनर्गलम् ॥ ३

---

6 swears 7 repeatedly 1 famine

भवतो वहुधान्य सञ्चयो वहिरागच्छतु तापशान्तये।
अशनाय वितीर्य तण्डुला नव नो मृत्युमुखात्क्षुधातुरान्॥ ४

इति तं वहुधा ययाचिरे चिरमस्तोकसमृद्धिसंयुतं।
गुरुरावददाशु हेलया "पिटकान्याहरतैत मण्डपम्"॥ ५

उदितं मधुरं निशम्य तद् गुरुणा जानपदा मदान्विताः।
विविशुः वसतिं[2] गुरोस्समे महतीं धान्यजिघृक्षयाऽऽसा॥ ६

सहसा कटुवागुवाच ता "नपहर्तुं मुपका इवेच्छथ।
चिरसंभृतधान्य मद्य मे" गिरमेतां परमस्य[3] सेवकः॥ ७

निगदन्निजकिङ्करानसौ निदिदेशेति "पिधत्त मण्डपं।
अनलस्सपदि प्रदीयतां दहतु प्रोज्ज्वल एव मूषिकान्॥ ८

तरसा सकलं समापितं न विलम्बोऽस्ति हि दुष्टकर्मसु।
रभसेन गुरुः प्रविष्टवान् स्वगृहं भोक्तुमथेप्सितं वहु॥ ९

प्रतिमां कृमिखादितां स्वका मनुपश्यन् गृहकुड्यलंविताम्।
कणिकाभिरभिप्लुतोऽद्भुतं स्वतनुस्वेदजलस्य, विह्वलः॥ १०

अकुतोभयमान्ययं गुरुः कथमप्याश्रयत स्वमासनं।
स्वदते स्म न किंचिदत्र वै गुरवे संप्रति दारितात्मने॥ ११

---

2 residence 3 God

क्षणलेशत एव मूषिकः श्चलितः कश्चन सुष्ठु खादति।
तदनून्दुरु[4]रन्य आगत स्तमनु प्रेङ्खति मूषकोऽपरः॥ १२

इति वैद्युतवेग[5]माश्रिताः क्षणकाले बहवश्च मूषिकाः।
पुरतः परतश्च भूमितस्समवेताः परितस्तमूर्ध्वतः॥ १३

तरति त्वरितं नदीमयं जवतो गच्छति गेहमाश्मनं।
विधिदृष्टिगतो न रक्ष्यते प्लवते वारिणि मूषिकावलिः॥ १४

झटिति प्रविशत्यसौ[6] गृहं गुरुराड्यत्र सुखं प्रतिष्ठितः।
कणशः कणशश्च मूषका युगपत्खादितुमुद्यता मुदा॥ १५

रदना रचितास्सुघर्षणादुपले तिग्मतरा मुहुर्मुहुः।
स लुठत्यतिवेगतो जपन्गुरुरक्षान्[7] भ्रमतीह तत्र च॥ १६

अहहा पृथुमांसपर्वतः क्षणतोऽस्थ्नां चय एव दारुणः।
अतिभीजनकं कथानकं परिपुष्णातु मतिं सुशोभनाम्॥ १७

---

4 Rat 5 lightning speed 6 this 7 beads.

# 10. ॥ सलमनो भ्रमरा श्च ॥

राज्यं बभार महता यशसा नृपेन्द्रः
प्राज्ञः पुरा सलमनस्सुगृहीतनामा[1] ।
श्रुत्वाद्भुतामवनिपस्य शिवाधिराज्ञी[2]
कीर्तिं, जगाम जवत शुभराजधानीम् ॥ १

आस्थानगान्यतिशयावहभांसि देवी
द्रष्टुं तथा समुचितं च बलिं[3] प्रदातुं ।
तत्राययौ न खलु केवलमेतदर्थं
तास्ता मुहुर्नृपकथा श्रुतवत्यसौ यत् ॥ २

विद्या वचांसि समलंकुरुते नृपस्य
प्रज्ञामणि गलति तद्वदनोत्थशब्दैः ।
आभाणकैः[4] श्रुतिसुखैरनिशं मनोज्ञ-
र्नीतीरसावुपदिशत्यवनीधरेन्द्रः ॥ ३

जिज्ञासुरत्र निखिलं खलु किंवदन्ती[5]-
तथ्यं बभूव महिषी, पुनरीदृगन्यत् ।
शश्राव सा सलमनं प्रति, यद्वरिष्ठं
प्रश्नान्स यद्विवृणुते गहनानसाध्यान् ॥ ४

---

Solomon 2 Queen of Sheba 3 tribute 4 riddles 5 rumour or report.

स्त्रैणा[6] श्च यद्विविध चित्रतरा स्स माया[7]:
पश्येत्सदा मुकुरगा इव सुप्रसन्नाः ।
सूक्ष्मेक्षतां नरपतेरिति विश्वघुष्टा -
मायादियं नृपसभामभिवीक्षितुं ताम् ॥ ५

राज्ञो दधार पुरतस्स्वकरद्वयात्तं
मालाद्वयं कुसुमभास्वरमञ्जसा सा ।
एकाऽवनीवरतमोपवनीगृहीता -
नेकप्रफुल्लसुमरङ्ग[8]चयाश्रितश्रीः ॥ ६

अन्या मनागनवरा रमणीयतायां
दिव्यी[9] भवत्कृतकपुष्पविचित्रशोभा ।
"सत्या ब्रवीतु कतरा कृतका[10] च केति
प्राज्ञो भवा" निति च सा सहसान्वयुङ्क्त ॥ ७

वाचंयम[11] स्सलमन स्सकला श्च सभ्या
आश्चर्यमूढहृदया दुधुवु[12] श्शिरांसि ।
मालाद्वयार्पितदृशा, स्सुचिरं नृपालो
निर्वाक्य, एष न पुनर्वदितेत्य भाञ्च ॥ ८

---

6 womanly 7 tricks 8 colour 9 divine 10 artificial.
11 mute 12 Shook 13 natural.

भूपेन्द्रमौनमुदिता पुनरङ्गनोचे
"नैसर्गिकी च कतरा बुधवर्य माला।
नैवोचितोऽत्र लघुकर्मणि ते श्रमोऽयं
ब्रूही" ति किन्तु बुधराडजहान्न मौनम्॥ ९

अत्यन्तसंशयविमोहितमानसोऽयं
चिन्तागतस्सपदि पश्यति चञ्चरीकान्।
म्लानप्रसूनमधुने भ्रमतो बहिस्स्थान् -
झङ्कारिणो, स्मयत ऊद्धरते च शीर्षम्॥ १०

सद्यस्समादिदिशिवानवघाट्यतां द्राग् -
वातायनं तदिति तद्भणितं तदेव।
उद्घाटितं च तरसैव यथानृपाज्ञं,
गेहान्तरं प्रमुदिता भ्रमराः प्रविष्टाः॥ ११

देव्या श्च दक्षिणकरस्थ सुमानि वेगा -
दापेतुरेवमखिला नृपतिस्सदस्याः।
मालां निजां च बुबुधुस्तु षिबाधिराज्ञी
13
लज्जाहता निववृते गदितुं स्वदृष्टम्॥ १२

प्राज्ञस्सदा लघुतरादपि वायुलेशात् -
तत्वं परं सुखकरं च सुनीतिमार्गम्।
अन्यत्तथा हृदयरञ्जकमीक्षते द्राक्
संराड् यथा सलमनः प्रथितश्चकार॥ १३

# 11 ॥ वासना प्राबल्यम् ॥

मुनिवरस्य पपात वियत्तला -
  च्चरणयोरतिपीडित एकदा ।
परिपतद्द्विकपादनखान्तर
  ग्रहणविश्लथ मूषिकशावकः ॥ १

करुणया मुनिरात्मतपोबला
  दकुरुताशु शिशुं वरकन्यकां ।
अतनुना कुतुकेन विवर्धितां
  रुचिरयौवनमागमदञ्जसा ॥ २

पितृजनस्य बभूव निसर्गजं
  परिणयं प्रति संप्रति चिन्तनं ।
अददतस्समये खलु कन्यका -
  मघचयस्सुमहानिति कीर्त्यते ॥ ३

तदनु सत्वरमेव विचारिता
  वरगुणा जनकेन च कन्यया ।
जगति यो बलवत्तम ईक्ष्यते
  स भविता दयितो मम नायकः ॥ ४

अवददेवमियं, तरसा मुनि -
 स्सह तया तपनं गतवानसौ ।
ऋषिरुवाच "रवे बलवत्तमो
 जयसि यत्त्वमिदं जगदोजसा ॥ ५

अकथयत्सहसा न तथेति सा
 निधिरयं तु बलस्य पिधीयते ।
घनगणे र्मुहु, राशु गतो मुनि -
 र्जलदमित्यवदश्च बलं तव ॥ ६

गुरुघनान् भणति स्म च कन्यका
 शिथिलयत्यधिकं पवनो बली ।
सपदि वातमगात्स सबालिको
 जगदिवानसि विष्णुरवीर्यवान् ॥ ७

अतिबली पवनो न स पर्वते
 प्रभवतीति तया प्रतिभाषितं ।
अथ पिताऽगमदेव शिलोच्चयं
 बहुबलो भवसीति च घुष्टवान् ॥ ८

युवतिरेतदवोचदथाचिरा -
 द्गिरिरयं मुषकेण निखन्यते ।
मुनिरनन्तरमेत्य च मूषकं
 त्वमसि किं बलवत्सु भणाग्रणीः ॥ ९

इति जगाद सुतेति तमावद -
छलियरो जनक प्रिय एष मे।
झटिति सोऽकृत तां किल मूषिकां
पुन,रहो वलिनी भुवि वासना ॥ १०

---

## 12 ॥ धात्री मोती ॥

ज्योतिर्नगर्यां लसति प्रशास्तस्सरित्तटे चैत्यनिकेत एकः।
उद्यानमध्ये चिरकालवर्ती श्वेतोपलैर्निर्मितपूर्व भाग ॥ १

निदाघतप्तः पथिकस्समीपे विश्रान्तिमिच्छन्निषसाद कश्चित्।
पप्रच्छ तत्रस्थजनं स सद्यः शेतेमहान्कोऽत्र सुहृत्प्रसीद ॥ २

किं विप्रवीरः कृत धर्म, आहो स्विद्योगिवर्यायतचित्तवृत्तिः।
कुतूहलं ब्रूहि ममात्र चेति, श्रुत्वैतदारब्ध ससंप्रवक्तुम् ३

पुरे पुरास्मिन्नभवन्नरेन्द्रा वीर्येण शौर्येण च विश्रुता ये।
ते राजपुत्राः प्रभवश्चसूर्य स्तदन्ववायस्य, तनोति यस्य ॥ ४

तारागणो रत्नकिरीटशोभां पृथ्वी भवत्यद्भुतपादपीठम्।
तद्वंशजातस्य महीश्वरस्य प्रासूतपुत्रं महिषी, परं तु ॥ ५

सद्योऽल्प भाग्यात्प्रययौ दिवं सा विहाय तोकं नृपतिं शुचेच।
धात्री नियुक्ता सहसाऽथ राज्ञा तदाप्रसूता शिशुपोषणाय॥ ६

जाता प्रसिद्धे नृपपुत्रवंशे चन्द्रानना कम्रतरा गुणौघैः।
मुक्ता भदन्तच्छवि भूषितास्या मोतीति सार्था भवतिस्मचाख्या॥७

चित्रं विरेजे नृपगेह एषा वत्सौ वहन्ती कील निर्विशेषं।
पर्यायतो वक्षसि तद्वदेह्, स्नेहः प्रवृद्धस्समये व्यतीते॥ ८

संमिश्रमस्या रुधिरं च तावन्नरेन्द्र भक्त्या, हृदये यदस्याः।
श्रद्धा वभूवाशिथिलातितीव्रा, कान्तं द्वयं तत्तनये समानम्॥ ९

भागीव मातु शिशुरेष कृत्ये नस्तन्यपायी यदि राजसूनुः।
पीतो न चेत स्वोदरपूरमेषः सुप्वाप मंचे न सचेदसुप्तः॥ १०

आश्लिष्य राज्ञो रजनीषु बालं वाहुद्वयेनाल्पतरेण बालः।
अशेत रक्षामिव कर्तुकामः पत्रं यथा पुष्पमित्रघातात्॥ ११

राजापकारस्समहान्प्रवृत्तो दुष्टाश्च संभूय कुमारराजं।
जिघांसवो दत्त धना असद्भयः छित्वासिनाऽऽसक्तजनांश्च
[राज्ञि॥ १२

सद्यो निहत्याखिलरक्षिलोकं संप्रापुरन्तः पुरमेव तूर्णं।
मोतीसुतः क्रीडति यत्र चांके नृपात्मजो न्यस्तकरः कुचे च॥ १३

सामन्द्रगीतं कुरुते च मोती वाद्यानुषक्ताश्च भवन्ति दास्यः।
तदा समागाच्छ्वसनेन हीनो नेत्राननादर्शितभीतिरेकः॥ १४

मोतीमवोचन्नृपसूनुमत्राहन्तुं नरास्सन्निहिता, न वेद्मि।
यद्रक्षिणो द्रव्यवशीकृता वा निपातिता वाऽनव धानकाले॥ १५

तावच्छ्रुतः खड्गनिघर्षणोत्थः शब्द श्च सोपानतलेषु जातः।
उत्सङ्गदेशात्समकालमम्बा मोती निनाय स्वसुतं ह्रदन्तम्॥ १६

राज्ञीसुतं पीतपयोधरोष्ठं तूर्णं स्तनात्संस्त्रयति स्म चांके।
विश्लिष्य सा राजसुतस्य चूडा वस्त्रं च मुक्तामयमेखलां च॥ १७

सद्यः शिरस्कं रशनां स्वपुत्रे संयोजयामास ससंभ्रमं च।
आत्मीयमांसासृग घो निधाय प्रेष्ठं सुतं धारितराज भूषम्॥ १८

ह्रदोऽन्तिके सा स्फुटितस्य गाढं निगूह्य भूपालकनन्दनं तं।
खले र्न यावद्व्यवधानमेभि र्निरस्यते तावदगाद्बहि श्च॥ १९

प्रोवाच तेष्वन्यतमो "ऽत्र शेते कुमारराजो [जगृहुस्तथा ते]।
भूषाविशेषै, स्तु पलायिता सा धेनुर्द्विवत्सा, कृतमेव सम्यक्॥ २०

तया स्ववत्सो जुगुपे, न दोषः, खड्गस्य धारा शमयत्यवेत।
स्फुलिङ्गमेतं किलराज भानोः, हत त्रिवारं सुहृद श्चतु श्च"॥ २१

"उष्णीषमस्तः कटिसूत्रधारी मोतीसुतः कूरवमेव चक्रे।
मुदा" हुरेवं नृपपुत्रगोपाः "खड्गा यदा तद्धृदये निमग्नाः ॥ २१

तदा न रोदो, न च वेदना वा, परं तु हासेन शिशूचितेन।
प्राणान्जहौ, यन्नृपनन्दनार्थं तत्याज स्वीयं किल जीवितं सः॥ २३

इत्थं ररक्षे नृपपुत्रमात्रा वंशोनृपालस्य चिरंतनो न"।
पान्थोऽब्रवीन्मित्र धनं प्रभूतं शुभानि वस्तूनि बहूनि तस्यै ॥ २४

वस्त्राणिदिव्यानि च, तज्जनेभ्यः क्षेत्राणि दत्तानि, गृहं च तस्यै।
प्रासादमध्येऽत्र. कदाचिदस्यास्स्नेहोऽधिको राजसुते
[स्वयसूनोः ॥ २४

इत्युक्तवन्तं पथिकं स ऊचे "देव प्रसीदत्विदुमत्रनाभात्।
वासांसि रत्नानि सुवर्णमस्यै दत्तानि भूयांसि धनानि चैव ॥ २६

परं तु तस्यां निशिसा प्रसन्नऽगाधं स्वचित्ते निचखान खड्गं।
"त्रातो नृपो, धापयितु सुतं मे यामी"ति सास्रमयते
[ब्रुवन्ती ॥ २७

# 13 ॥ तन्तुवायसिलसः ॥

इङ्गलण्डदेशे न्यवसत्कदाचन
ग्रामे कुविन्द स्सिलसाभिधः पुरा ।
अगृह्यसौ मध्यवया अनक्षरो
दिवा सदा व्याप्रियत स्वकर्मणि ॥ १

तुरीसहायो वसनानि निर्ममे
धनेन सार्यं च विचिक्रियेऽसा ।
आयौवनादाचरतोऽस्य तं क्रमं
यातासु नैकासु शरत्सु खण्डशः ॥ २

किंचिद्धनं संचित, मात्मतुष्टये
ददर्श तन्निष्कमयं दिने दिने ।
रात्रावनल्पद्युति दीपसन्निधौ
पस्पर्श भक्त्या गणयां चकार च ॥ ३

पुनः पुनः प्रत्यहमेष चक्रिवा –
नेवं स यावच्छयितुं समुत्थित ।
मित्रं न, बन्धुर्न, नचैव तादृशा
बभूवुरस्मिन्सिलसस्य भूतले ॥ ४

येऽवापुरेतस्य हृदि स्थलं कृशं,
तथैव भावा न चकर्षुरेव तं।
समानि वा पक्षिरुतानि चन्द्रिका,
स्वकं सुवर्णं भवति स्म तज्जगत् ॥ ५

एवं तुरीहाटकबद्धजीवितं
चचाल वर्षाण्यधिकान्यकष्टतः।
परं तु किंचित्समपद्यतास्य तत्
प्रक्षोभयामास तदीयजीवितम् ॥ ६

न जीवयात्रा भवतीह जन्मिनः
कदाप्यकुण्ठा च चिरंकरीतिका।
स जातु विक्रेतुमहस्कृतान्पटान्
सायं यथावत्स्वगृहाद्गतस्तदा ॥ ७

चोरो जहारास्य धनं समग्रतो
बभूव योऽस्मिश्चिरदत्तवीक्षणः।
कुविन्द आगान्निरवर्तयन्निजाः
क्रियाः, प्रवृत्त श्च धनस्य दर्शने ॥ ८

हा किं वराकस्सिलसः करोत्यसौ
चुक्रोश शीर्षे समताडयद्भृशं।
धनं गतं केवलमेतदेव नो
सर्वं गतं तस्य यतोऽस्य तत्तथा ॥ ९

सुष्वाप रात्रौ न, पुनः पुन श्च सः
ददर्श पेटीं निजनिष्क काङ्क्षया ।
छित्राणि नाहानि चकार किंचन
स्त्रीयेषु कृत्येषु मनो विवेश न ॥ १०

कालो हि तीक्ष्णानि विरोपयत्ययं
व्रणानि मार्गेतर दुश्शमान्यपि ।
क्रमेण किंचिद्व्ययने कृतश्रमस्
तथापि चिन्ता न गतास्य निष्कगा ॥ ११

अगान्मुहुर्मोह मयं गतस्मृति –
स्तं कापि नाशा त्रिजहात्वकारणात् ।
गतं सुवर्णं पुनरेष्यतीति त –
न्निष्काण्डमेवार्धकृते स कर्मणि ॥ १२

मुहुर्व्यरंसीत्, प्रतिपालयन्नयं
सायं कदाचित्सिलसस्सुनिश्चितः ।
द्वारि स्थितो विस्मरणं चिरं यया –
त्वुन्मील्य चक्षुः स्वगृहान्तरैक्षत ॥ १३

सुवर्णपुञ्ज स्सपदि प्रभास्वरो
दीपान्तिके नेत्रपथं जगाम च ।
कथं नु वर्ण्यस्सिलसस्य तत्क्षणे
मोदो, दधाव प्रति हाटकं स्वकम् ॥ १४

अहो सुवर्णं यद्नेन वीक्षितं
सुवर्णवर्णं च सुवर्णकुन्तलं ।
सचेतनं पश्यदितस्ततोऽद्भुतं,
द्राक्सोऽभवत् स्तम्भितचित्तवृत्तिकः ॥ १५

लब्धप्रसादोऽथ पुनर्बुबोध सः
मनुष्यलोकं कनकाकृतीह यत् ।
वन्ध्ये कथं तद्धृदये न विद्यते
प्रेमांकुराः प्रोद्भवन्नवाः शुभाः ॥ १६

अबोधमेवाशु शिशुं गृहीतवान्
गाढं जुगूहोरसि बालिकां स तां ।
अनन्तरं पायनशायनादिकं
चकार रात्रौ ग्निलसस्स्वयं मुदा ॥ १७

वार्ताद्भुतेयं प्रससार वेगतो
ग्रामेऽन्तिकस्थाग्सिलसस्य सद्मनि ।
समेत्य हृष्टेन बभाषिरे समं
वृत्तान्तमेतं प्रति तेन सादरम् ॥ १८

अवेक्षमाणा मुहुरेव बालिका
मेप्पीति नाम्ना स्म च तां वितन्वते ।
एका विचेष्टा प्रकृतेः करोत्यसौ
लोकं समस्तं स्वजनं च बान्धवम् ॥ १९

एण्पी कथं तत्र गृहं विवेश, सा
तीरे तडाकस्य समीप वर्तिनः ।
मात्रा विसृष्टा सलिलं प्रविष्टया,
तयाऽनिवृत्तेऽस्तमिते च भास्करे ॥ २०

शिशुर्ददर्शात्र च दीपिकाप्रभां,
याता च सा तां प्रति, मुग्धचेतसः ।
द्वारि स्थितस्याङ्घ्रियुगान्तरालतो
गेहं प्रविष्टा सिलसस्य शोभना ॥ २१

अकारि कश्चिन्मरुरेतया मनो -
हरः किलारामवरस्समावहः ॥ २२

---

# 14 ॥ आनन्दकञ्चुकः ॥

रोगाभिभूतो नृपतिः परंतु दृशौ प्रसन्ने सहिते च कान्त्या ।
अभुङ्क्त राजोचित भोजनानि सुष्वाप रात्रौ कथनान्वितोऽसौ ॥१

तथाप्यवोचन्न सुखीत्यहं सः राजा किलासावधिकं विजज्ञे ।
अथाययुर्वैशनिशोऽगदज्ञा नापारयंस्ते शमनं विधातुम् ॥ २

आनाययामास परांस्ततोऽन्ते सुविश्रुतौ द्वौ भिषजौ समेतौ ।
एकस्तयो र्मूषिकवत् कृशोऽभूद् ज्ञानार्जने यस्समयं निनाय ॥ ३

लेभे च कालं भवितुं न पीवाऽपरो न वै शास्त्रकृतिं लुलोके ।
क्लेशं तदीया न ददुश्चिकित्स्या श्चजीव भाजो ददति स्म सम्यक्॥४

मृता यदि स्युर्द्विगुणं प्रदद्यात्तत्सन्तति वैद्यवरावुभौ तौ ।
जिह्वां नृपालस्य समं परीक्षां चक्रात उत्तुङ्गकुतूहलेन ॥ ५

खट्वागतस्योरसि ताडनं चांगुष्ठेन पूर्वस्स्म करोत्यथान्यः ।
परं तु लेशोऽपि रुजो न दृष्टस्स्वस्योऽसि राजन्निति वृद्ध उचे ॥ ६

सद्यो ववौ क्रोधमहाप्रवातो राजानुरूपो नृपतेर्ददे च ।
उद्बध्यतामेष इतीयमाज्ञा, बभूव भीतो भिषगन्य ईषत् ॥ ७

व्यामृश्य नासां स ततस्सचिन्तं प्रज्ञावतीं प्राचकथच्चिकित्सां ।
स्वप्यान्नरेशो सुखिकंचुके चे देकां त्रियामां भविता विरोगः ॥ ८

ततोऽनु दूतास्तुरगाधिरूढा स्सर्वत्र राज्ये जवतः प्रचेरुः ।
आलोकितास्तैर्बहवश्च पृष्टाः परंत्वलब्धः पुरुषः प्रहृष्टः ॥ ९

अकिंचना ये धनलिप्सवस्ते वित्तान्विता रिक्ततरा श्च मेनिरे ।
व्याध्याधिदारिद्र्यमृति प्रसूतारिष्टार्तिविद्धास्सकला बभूवु ॥ १०

काले गते ने ददृशुस्सहासं ग्रामे शयानं मृदुले च शाद्वले ।
सीत्कारिणं भिक्षुकवेषमेकं गायन्तमुच्चैस्समये वसन्ते ॥ ११

श्रान्तास्स्थितास्तत्र नृपस्य दूता स्ताद्दङ्मुदापूर्णममुं समीक्ष्य ।
आभासि मित्र त्वमतीव हृष्टस्ते प्रोचुरेवं, स बभाण चेत्थं ॥ १२

स्वरेण तारेण मुदन्वितेन न मेऽवकाशो भवितुं हि दुःखी ।
आलस्ययुक्तस्य नरस्य लोके व्यापारजालं सुमहत्किलास्ते" ॥ १३

"अयं नरो, नः खलु भाग्यमस्मान्निनायसम्यक्" "शतमत्रदद्मः ।
निष्कानिते मित्र, तवाद्य कंचुकं यावन्निशं देहि भवोत्तमर्ण "॥ १४

निधाय पृष्ठं स तृणे जहास यथास्य नीलं वदनं बभूव ।
"दास्यामि नूनं, भगवान् हि वेत्ति, परंतु पृष्ठे मम
[ कंचुको न" ॥ १५

एवं सहास्यं हसतिस्म धूर्तो राजा तु शुश्राव दिने दिने सः ।
अपार्थतां दूतपरिश्रमाणां ददर्श भूयश्च नरस्य पीडाः ॥ १६

जिहाय संचिन्त्य निरर्थजन्म रोगांश्च रूढांस्तमसि प्रकामं ।
उद्घाटयामास स वातमार्गान् ववौ च वायुश्शयनीयगेहे ॥ १७

गत्वा बहिर्देहपरिश्रमं द्राक् चकार क्लृप्तेन पथा स्वकेन ।
ऊचुः प्रजा मङ्गलमस्य भूमिर्हर्षान्विता मोदयुतश्च राजा ॥ १८

---

# 15. ॥ बलैं प्रभुः ॥

तस्यास्स कर्णविवरे निगदत्यनुच्चै
"ख्यातुं मनो मम यदीङ्गितचेष्टिताद्यैः।
शक्नोत्यहं प्रतिदिनं बहु दष्टवांस्त्वां,
मन्येऽबले मयि महांस्तव भाव बन्धः ॥ १

श्रुत्वेदमावदति सा मृदुलैर्वचोभि
"स्त्वय्येव चित्तमनुरज्यति नान्यतो मे"।
आलेखकः प्रकृतिरूपनिरूपकोऽयं,[1]
सा ग्रामिका, तदधरे प्रियविह्वलेऽस्मा ॥ २

स्वीयं विनापनयनं निदधाति, देव -[2]
क्षेत्रं स तां नयति, तत्पितृमन्दिरात्तां।
यातो, "नयौतकमहं प्रभवामि दातुं,[3]
पत्न्यै प्रदेयमिह नेतरथा च किंचित् ॥ ३

प्रेमा विधास्यति गृहं सुखमस्मदीयं
त्वं जीवितात्प्रियतरा म' इति ब्रवीति।
उद्यानराजिमनु तां चलत पुरस्तात्
हर्म्याणि पश्यत इहातिमहान्ति चान्तः ॥ ४

1. Landscape painter 2. Church 3. dowry

शब्दायते मृदुतरं वनमातरिश्वा,
श्चिन्तागतस्सपदि बोधमवाप्य वक्ति ।
कान्ता "मिमानि भवनानि मनोहराणि
पश्याव यत्र धनिन प्रभवो वसन्ति ॥ ५

तत्सेविता चलति साथ शृणोति तस्य
स्नेहार्द्रसल्लपनवाचमवेक्षते च ।
यद्यद्बभूव रुचिरं महितं च तत्तन्
मध्ये तदीयनिजयोर्गृहयो स्समस्तम् ॥ ६
4

छायाद्रुमै र्बहुवि धैरुपशोभितानि
स्वल्पेतराण्युपवनानि तथैव नैकान् ।
छन्दानुरूपरचितानतिविस्तृताना -
5
रामान् पुराणवसतीश्च महान्वयानाम् ॥ ७
6

या निर्मितास्सुखकृते च महत्त्वहेतोः,
तद्दर्शितं निखिलमेव करोति तस्याः ।
प्रेयस्तरं तम, भिगच्छति तत्कुटीरं
चित्तेन सा, भवति यन्निकटे क्रमेण ॥ ८

---

4. his and her 5. according to taste 6. Nobles

ताभ्यां स्वजीव समयश्च नयिष्यतेऽत्र
कान्तानुरक्तिरधिका च करिष्यतेऽत्र ।
गार्हस्थ्यमस्य मधुरं भविताऽत्र नूनं
व्यग्रो भविष्यति यदा भरणे गृहस्य ॥ ९

इत्थं कुतूहलनिविष्टमना नितान्तं
मङ्क्षु[7] प्रपश्यति च तोरणमायतं[8] सा ।
वंशीयचिह्नसुभगं[9], प्रविशत्य धस्तात्,
सर्वातिशायि सदनं च समीक्षतेन्तः ॥ १०

नैके प्रमोद भरिताः प्रणमन्ति चैनं
द्वारे प्रगल्भतरकर्मकरा विनीताः ।
नीचैर्वदन्ति मृदु चोत्तर संप्रदाने,
तावत्स गच्छति पुरः क्रमशश्च कक्ष्याः ॥ ११

सा विस्मितेन नयनेन निरीक्षते त –
न्नैवाधिगच्छति, किमेतदिति प्रमूढा ।
गाम्भीर्यभाक् स तरसा परिवर्तते, तां
ब्रूते "ममेदमखिलं तव चे" ति शान्तम् ॥ १२

---

7. shortly 8. arch 9. family ensign

बलेःप्रभुस्स लसतीह महत्त्वसंपत् –
स्वातन्त्र्यनीतिमहितोऽतुलकीर्तिकोशः ।
सद्यो वराननमभूद्भितस्तु तस्या
रक्तं, च नम्रवदना तनुलज्जया सा ॥ १३

जातं मनो विकृत, माशु मुखं तदीयं
भूतं च पाण्डु मरणाहतवत्समन्तात् ।
किन्त्वेष कान्त इव संपरिषस्वजे तां,
प्रेम्णा च तद्धृदयमेष दृढीचकार ॥ १४

तस्माद्सावयततार्तिमिमां नियन्तुं
चित्तं तथापि विषसाद कदाचिदस्याः ।
स्त्रीणां निसर्गजविनीतिगुणाः मनस्सा[10]
स्थानानुरूपकरणीयचये[11] न्ययुङ्क्त ॥ १५

दाक्षिण्यवान्पतिरयं च बभूव नित्यं,
सारल्यसंभृतमभूद्धृदयं च तस्याः ।
औदार्यमीदृशम भात्तरसा महत्या
भूयिष्ठमेव यदियं जनवल्लभा भूत् ॥ १६

---

10. Ablative case 11. duty

आधिस्त्वखेदय दजस्रमिमां नु कश्चित्,
विद्धा बभूव हृदयेऽविरतं यतस्सा।
निष्पीडिताऽ सहजगौरव भार भूम्ना,
सन्नाऽधिक, भवति सन्नतरा स्म भूयः॥ १७

मन्दं ललाप किमयं न भवेत्स चित्र –
कारो जहार मम मानसमा:! पुनर्य। [12]
इत्थ समाद पुरत: क्रमशाश्च तस्य
वर्मा श्च सुन्दरतरान्सुषुवेऽ ग्रतस्त्रीन्॥ १८

पश्चादकालमृतिमाप सती द्रुतं सा
मग्न श्च शोकजलधौ प्रभुरेप बलिः।
दीर्घं रुरोद गहनं च पुन पुनः स
गच्छन्रुरोद, चलित श्च रुरोद भूरि॥ १९

तस्याश्शरीरमथ वीक्षितवान्कथंचि –
दानाय्य तानि वसनानि तया धृतानि।
ग्रामे विवाह समये, परिधाप्य तां तैः
शान्त्यं स्वबन्धुभिरकारयदन्त्य कार्यम्॥ २०

---

12. Ah!

# 16. ॥ स्नुषाचतुष्टयम् ॥

श्री श्रावस्त्यां विपुलविभवः कोऽप्यभूत्सार्थवाहो
वाणिज्यार्थं जिगमिषुरसौ प्रस्थितः शोभनेऽह्नि ।
काले तस्मिंस्तनयगृहिणीराह्वयामास चासा -
मेकैकस्यै समतिरददाद्व्रीहिबीजानि पंच ॥ १

युष्माभिर्वै चतसृभिरपीमानि यावद्गतोऽहं
प्रत्यागन्ता पुनरपि गृहं रक्षितव्यानि नूनम् ।
इत्यादेशं वितरति नवं सस्म तद्विस्मयाय
प्राज्ञाचारो न खलु सुलभज्ञेयतासन्नियुक्तः ॥ २

आद्या तासां श्वशुरगमनानन्तरं निर्विलम्बं
धान्यैरन्यैः स्सह गृहगतै र्योजयामास तानि ।
आस्ये चान्या चपलहृदया प्रास्य तान्याश्वखादी -
दार्यस्याज्ञामनुसृतवती तान्यरक्षत्तृतीया ॥ ३

चित्रं कर्माचरितमतुलं शिष्टया[1] बुद्धिमत्या
भूमावुप्त्वा बहुगुणयुतं धान्यमुत्पाद्य बाला ।
भूयो भूयः कृषिरचनया बाप्तभूयिष्ठधान्या
वापं वापं पुनरपि पृशुं संचयं सा चकार ॥ ४

---

1. The remaining one (the fourth)

श्रेष्ठ्यायातस्तदनु चलिते हायनेऽसौ तृतीये
श्रुत्वा सद्यो मतिनिपुणतामात्मनस्तु स्नुषाणां ।
आद्ये द्वे द्रागकुरुत गृहे दासकर्मानुयुक्ते
तार्तीयीकां तदुपरि च तां सर्वराज्ञीं कनिष्ठाम् ॥

* शुभमस्तु *



# PADYA PUSHPANJALI.

## PART I.

### I. A SONG OF LIFE

1. Say not in sorrowful terms that life is empty. The world is real, not dreamy Always perform righteous acts.

2. The past empties itself in the sea of eternity and the future is enveloped in darkness. The present is visible and living. Always......

3, Desire is bondage and not the body. Cut it off and release is there immediately and here itself. This will continue after the body falls. Always.....

4. The past moment comes not back, time fleets so rapidly that even the existence of the present is doubted. Always.......

5 Not wholly joyous nor wholly miserable life is, by resorting to even-mindedness make it (the miserable portion also) joyous or give up both (misery and joy) with a balanced mind. Always....

6. In actions, dismiss the notion of one's own Act with the consciousness of world's work. This attitude will develop through practice. Always......

7. Unshakable wilt thou be even while the atom-bomb falls provided thy attitude is on this decided state Indulge not in unstable disputations. Always......

8 Obscure is the beginning and obscure is the end. Luckily the middle is manifest. Abandoning the idea that it is illusory, always perform righteous acts.

## 2. REMEMBRANCE OF RISHIS

1. The un-made word (the vedas) flowed from their mouths; they discovered the entire universe through the yoga of meditation, all their gods were worshipped in fire, prostration to those ancient seers.

2, They, of superb tranquillity, burnt down, through severe penance and the heat of the fire kindled by them, the evil forces that moved about on earth destroying the happiness of mankind in the shape of asuras and panis in ancient days.

3. Their mind was bigger than the universe and minuter than the minutest atom, they knew of things from the highest to the lowest, they gave all the sciences for the welfare of human society.

4. They pondered well over the complex and profound nature of mind and produced for the prosperity of man well-laid-out bunds of Dharma, remembering older practices.

5. We are now attempting to subvert from the root their long-standing laws of tested strength, shall we not assume modesty thinking of those great rishis and desist from such attempts soon?

## 3. THE MANSION OF POETRY

1. Arises, surpassing all other splendours and built of the splendour called word, by bands of great (artists), this ancient, lofty, broad-based and stable palace in our dear Bharat.

2. The rays emanating from this (palace) of lustre surely illuminate your world otherwise blind, the authorless word, the treasure-house of delectables for the discerning, forms the invisible, firm foundation.

3. The Ramayana of immortal lustre, the first poem, was revealed by Valmiki, the grandfather of the family of poets; the Mahabharata shedding brilliance in the world, the Himalaya of splendour, was composed by Vyasa.

4. This sage-made pair appears as it were the unshakable, splendid and broad basement of the mansion, under the shade of which all (other) poets constructed sweet and fine apartments of poetry.

5. The wonderful hall called Brihat katha, the play-house of childpoets and the puranas (are there), these form the ground-floor which is frequented by the wise for matter and ideas.

6. Then entered rules in the art of architecture; lack of naturalness slightly appeared, ornamentation came in; but there was moderation. At that time arose wonderful structures.

7. This was the great golden portion of the mansion and the chief architect there was the poet Kalidasa. Those admiring readers throughout the whole world who once enter the Sakuntala or Meghasandesa never get out.

8, The great poets Bhasa, Aswaghosha, Bhavabhuti and others created wonderful and stage-brilliant store-houses of fine sentiments and thus another floor was brought into existence. Bana and others also had contributed their substantial labour therefor.

9. Increase of the decrease of simplicity, abundance of artificiality, intensity of verbosity, poverty in sense, excessive use of compounds and an overlove of figures of speech, these

showed themselves in the latter-day productions and light was put out.

10. What is there to be wondered at, if people generally avoid such dark and unfrequented structures! Let the good mansion be made big and light-laden once again by (following) the simple path adopted in former times.

## 4. INTERDEPENDENCE

1. The one great law of interdependence reigns supreme in the universe under the operation of which all affairs of the world run smooth, the sun attracts the sun and planets and these (attract) one another and thus are all stationed stable in the sky through the strength of cooperation.

2. On minute observation, not a single thing which is devoid of dependence will cross the path of (your) eyes, the entire universe from the atom to the extremity of Brahmanda is subject to the rule of this Law.

3. Well-known is the exchange of sacrifice and food between men and gods, the sea and the cloud and the master and the good servant are bound to each other, this (mutual) tie between the husband and the wife and the ruler and the subjects is so patent This nature-ordained relationship is eternal in the world.

4. All of you are every day turning out work with all your means, you know or know not that its fruit is enjoyed by all. The article produced by the labourer's hand is invariably not for his enjoyment, the tiller or the weaver does not get the grain or raiment.

5. In this manner is seen the movement of all the parts in the universe for the achievement of a single purpose; but

this one thing has to be pondered over that a mysterious selfishness, found in every one, makes creatures do sinful acts in abundance by compulsion with the result that the individual the community, the nation and the country are bitten with hatred towards each other.

## 5. NATURE AND ART.

1. That which is lovely, glorious and pleasing, charming and sweet, known as Lakshmi in the world is whose one half; that which is terrifying, cruel, killing and extremely horrible known as Durga in the world is whose other half.

2. Whose pleasant and fearful forms were assumed by god Ardhanariswara with handsome eyes and brows, winning smile and stout breasts (on one side) and the pinaka bow, snakes and the forehead-eye (on the other side), she, our mother Nature, shines arrayed in two forms.

3. Man, the child of that goddess was not satisfied with her good creations and with the rise of intelligence brought forth arts, peaceful and terriblé things from the plough to the atombomb were produced in plenty. This creation of man goes by the name of art-goddess (Kaladevata or Saraswati )

4. Thus, lucky indeed is mankind for the enjoyment of which there are the nature-given moonlight, rivers, cuckoo-cry, flowers, etc., houses, gardens etc., given by skilled arts and poetry, music etc., given by fine arts.

5. The greater the variety of enjoyment, the greater the modes of destruction, the world is already dreadful on account of lightning, hurricane, germs and wild animals but today it is more so on account of the life-taking machine-weapons. Let

